श्रीगणेशाय नमः ।

श्रीशारदयै नमः ।

शिवपञ्चाक्षरीभाष्यम् ।

नमः शिवाय इति मन्त्रः । तस्य व्याख्यानम् ।

१म व्याख्यानम् ।

त्यागो हि नमसो वाच्य आनन्दः प्रकृतेस्तथा । फलं प्रत्ययवाच्यं स्यात् त्याज्यं पत्रफलादिकम् ॥ १ ॥

त्यजामीदमिदं सर्वं चतुर्णामिह सिद्धये ।

२य व्याख्यानम् ।

अथवा नमसो वाच्य प्रणामो दैन्यलब्धये ॥ २ ॥

दैन्यं सेवा तथा ज्ञप्तिः सिद्धिः सर्वस्य वस्तुनः । नमामि देवदेवेशं सकामोऽकाम एव वा ॥ ३ ॥

३य व्याख्यानम् ।

नञा निषिध्यते भावविकृतिर्जगदात्मनः । मसनं देवदेवेश नेह नानास्तिशब्दतः ॥ ४ ॥

अयेति गमयेत्यर्थे तस्माच्छुद्धोऽस्मि नित्यशः । प्रणामो देहगेहादेरभिमानस्य नाशनम् ॥ ५ ॥

शिवो ब्रह्मादिरूपः स्याच्छक्तिभिस्तिसृभिः सह । अथवा तूर्यमेव स्यान्निर्गुणं ब्रह्म तत्परम् ॥ ६ ॥

नमसो नमने शक्तिर्नमनं ध्यानमेव च । चतुर्थ्या तादात्म्यसम्बन्धःकथ्यते प्रत्यगात्मनोः ॥ ७ ॥

अहं शिवः शिवोऽहं च मन्ये वेदान्तनिष्ठया । इत्येव नम इत्युक्तं वेदैः शास्त्रैश्च सर्वशः ॥ ८ ॥

अथवा दास एवाहमहं दास इतीरणम् । इत्येव नम इत्युक्तं वेदैः शास्त्रैश्च सर्वशः ॥ ९ ॥

अथवेदमिदं सर्वं त्यजामि परमाप्तये । अर्थं धर्मं च कामं च वाञ्छंश्च जगदीश्वरम् ॥ १० ॥

एतन्मन्त्रार्थतत्त्वज्ञैर्वेदवेदान्ततत्परैः । निर्णीतं तत्त्वगर्भं यदुविज्ञेयं मुक्तिलब्धये ॥ ११ ॥

अथवा मुक्तिलाभाय ध्येयं तत्त्वविवेकतः । भिन्नं बुद्ध्वा हृदा देवं मन्त्रेणेशं जगद्गुरुम् ॥ १२ ॥

४र्थ व्याख्यानम् ।

नमेरचि नमः प्रोक्तो जन्तास्याज्जगदीश्वरे । तस्माद्दासोऽहमित्येवं मत्वा मां प्रापयात्मनि ॥ १३ ॥

अस्मिञ्छेते जगत्सर्वं तन्मयं शब्दगामि यत् । तद्वानाच्छिव इत्युक्तं कारणं ब्रह्मतत्परैः ॥ १४ ॥

न मा यस्यास्ति लक्ष्मीश सोहं देवो न संशयः । तस्मान्मे प्रापयेहैव लक्ष्मीं विद्यां सनातनीम् ॥ १५ ॥

यस्मादानन्दरूपस्त्वं देवैर्वेदैर्निगद्यसे । तस्मान्मे देहि योगीश भद्रं ज्ञानं सुभावनम् ॥ १६ ॥

५म व्याख्यानम् ।

यस्मात्त्वं त्वं नेति नेतीति नञर्थं मासि वेदजम् । तस्मान्नमोसि भद्रं मे यतो जातोऽनमो नमः ॥ १७ ॥

शिवं शिवमथाप्राप्तः शिवायेति निगद्यसे । शिवाय मे तथा प्राप्त्या शिवायं कुरु सर्वदा ॥ १८ ॥

६ष्ट व्याख्यानम् ।

शिवां यातो महाभद्र नमोहं मायया ध्रुवम् । ततो नमाय मह्यं मः शिवायं कुरु सर्वथा ॥१९॥

७म व्याख्यानम् ।

शिव मेषियतो ज्ञप्त्या शिवायस्त्वं प्रपठ्यसे । नते माया यतो ज्ञप्त्या नमो वेदैः प्रपठ्यते ॥२०॥

नमोहं च शिवायोहं नमो मह्यं नमो नमः । नमो नमाय शुद्धाय मङ्गलाय नमो नमः ॥२१॥

नमो नमसनं शम्भो निराकाराय ते नमः । निर्गुणं निष्क्रियं शान्तमित्याद्याः श्रुतयो जगुः ॥२२॥

नमो ब्रह्म निराकारं शिवायं शिव सर्वदा । अतोहं च नमा भद्र शिवायोहं न संशयः ॥२३॥

इति पद्मपादाचार्यविरचितं शिवपञ्चाक्षरीभाष्यं सम्पूर्णम् ।